॥ शिवोम् ॥

# ॥ शिवलिङ्गार्चनकल्पतरु सहित श्रीकाशीमृतिमोक्ष निर्णयः ॥

॥ श्रीस्वामी अनन्तानन्दगिरिजीविरचितः ॥

॥ तदाज्ञया ॥

मुलक पञ्जाब जिला शाहपुर साहीवाल के रहनेवाले श्रीभाई धनामलजी के पुत्र श्रीतीर्थरामजी ने श्रीकाशीपुरीनिवासी ने श्रीकाशीजी में छपवाया है १००० एक सहस्र, श्री शिवलिङ्गार्चनकल्पतरु॥ १००० एक सहस्र, श्री काशीमृतिमोक्षनिर्णय ॥

॥ श्रीसम्वत् १९६२ शाके १८२७ ॥

मार्गशीर्ष शुक्ल ५ ॥ शुक्रवार ॥

भारतजीवन प्रेस, बनारस ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

३
१५५



## ॥ भूमिका ॥

ॐ स्वस्ति श्रीगणेशाय नमः ॥

श्रीकाशीनिवासी सुप्रसिद्ध श्रीस्वामी अनन्तानन्दगिरिजीके रचित ग्रंथ ५ पञ्च, सो श्रीशारीरिक मीमांसा भाष्य सारसंग्रह है, और श्रीकाशीमृतिमोक्षनिर्णय है, और श्रीवृत्तिप्रभाकर सारसंग्रह है, और स्वकृतप्रश्नोत्तर हैं, और श्रीशिवलिङ्गार्चनकल्पतरु है। सो लोकोपकारार्थ उपर्युक्त स्वामीजीने श्रद्धावाले आस्तिक लोगों के वास्ते बनाये हैं सो आपलोग इनको देखकर दृष्टिसे पवित्र करैं। और श्रीकाशीमृतिमोक्षनिर्णय की यह ३ तीसरी आवृत्ति है। और श्रीशिवलिङ्गार्चन कल्पतरु की यह दूसरी आवृत्ति है श्रीरस्तु।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ ओम् ॥

# श्रीशिवलिङ्गार्चनकल्पतरुः

ॐस्वस्ति श्रीगणेशाय नमः ॥ श्रीकाशीविश्वेश्वराभ्यांनमः॥ श्रीगुरुभ्योनमः ॥

श्रीशिवलिङ्गार्चनकल्पतरुः प्रारम्भः ॥

॥बृहज्जाबालोपनिषदि॥

धिग्भस्मरहितं भालन्धिग्ग्राममशिवालयम् धिगनीशार्चनञ्जन्म धिग्विद्यामशिवाश्रयामित्यादि श्रुत्याऽपि प्रतिमायाः पूज्यत्वे सत्याह,। शिवलिङ्गं त्रिसन्ध्यमभ्यर्च्य तदेव स्नापनं पयः त्रिः पीत्वा महापातकेभ्यो विमुच्यते न शोकमाप्नोति ॥ २ ॥ तथा रुद्रोपनिषद्यपि, हृदि स्थितं द्वादशाङ्गुलं लिङ्गरूपिणम् वाह्यचेन्द्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नीलमणिमयम्पञ्चाक्षरेण प्रपूजयति शिव-
शिवेति व्याहरन्नेव भगवान् लक्ष्म्या सह
प्रेमाश्रून्विमुंचन्नेव लिङ्गाऽग्रतो वै नृत्यति
शिवस्य नैवेद्यं च तद्व्याहरन्नेव भक्षयति यो
वा ऽन्योऽपि ब्राह्मणः क्षत्रियो वैश्यो वा शू-
द्रोऽपि शिवस्य नैवेद्यं भुञ्जीत समतीतदुःख
ॐ सर्व्वमैश्वर्यमाप्नोति तरति शोकम् ॥ ये
वै शिवस्य नैवेद्यन्न भक्षयन्ति अन्धन्तमः
प्रविशन्ति नरकेषु पतन्ति ह वै न सुखं लभ-
न्त इति श्रुतेः ॥३॥ शंभोर्निर्माल्यकं शुद्धं भुञ्जी-
यात्सर्व्वतो द्विजइति स्कान्दे ॥४॥ शौनकं प्रति
पितामहवाक्यम्, सद्यः फलप्रदं पुण्यं सर्व्व-
पातकनाशनम् ॥ सर्व्वमंगलमाङ्गल्यं सर्व्वपा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वनपावनम् ॥ दुष्टग्रहोपशमनं स्वष्टसिद्धिप्रदा-
यकम् ॥ सर्व्वकल्याणकृत् प्रोक्तं शम्भोःपादोद-
कं शुभम् ॥ पादोदकस्य पानेन सामीप्यं लभते
सदेति स्कान्दे ॥५॥ शिवरहस्ये तृतीयांशे सं-
सारबन्धनाशाय शिवनैवेद्यभोजनम् । कल्पितं
गिरिशेनेदमन्ततो मुक्तिसाधनम् ॥६॥ जावा-
लश्रुतौ, रुद्रभुक्तं भुंजीयाद्रुद्रपीतं पिवेद्रुद्राघ्रातं
जिघ्रेदिति ॥७॥ देवीभागवते, अनेन भुक्तंदेवेन
भुक्तन्तत्तु तथा भवेत् । पीतं रुद्रेण तत्पीतं घ्रातं
घ्रातं शिवेन यत् ॥८॥ लिङ्गरूपिणं मामेव
संपूज्य चिन्तयन्तीति वृहज्जावालश्रुतेः ॥९॥
शिवलिङ्गार्चनं कार्यं द्विजस्त्रीभिर्द्विजैरिवेति
स्कान्दे ॥१०॥ अन्यदपि ब्रह्मवैवर्तवाक्यम्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्विजो वा द्विजनारी वा त्यक्त्वा शङ्करपूजनम् ॥ यदि भुङ्क्ते तदा योनिं चाण्डालीं प्राप्यते ध्रुवम् ॥ ११ ॥ लिङ्गपुराणे, मृन्मयं लिङ्गमभ्यर्च्य स्वभर्त्तुर्वल्लभाऽभवत् । शची देवी तथाश्चाऽन्यास्तस्मात्पूज्यं महीमयमिति ॥ शचीदेवी नाम इन्द्राणी का है ॥ १२ ॥ विना भस्मत्रिपुंड्रेण विनारुद्राक्षमालया ॥ पूजितोऽपि, महादेवो न तस्य फलदो भवेदिति लैङ्गे ॥ १३ ॥ बृहज्जावालोपनिषदि नाऽश्नीयादपोऽन्नमन्यदपि प्रमादात्त्यक्त्वा भस्मधारणन्नगायत्रीञ्जपेन्नजुहुयादग्नौ न तर्प्ययेद्देवानृषींश्चपितॄनयमेव धर्म्मः सनातनः सर्व्वपापप्रणाशको मोक्षहेतुर्नित्यो ऽयन्धर्म्मो ब्रह्मचारी गृही वाणप्रस्थयति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नामेतदकरणे प्रत्यवैतीति ॥१४॥ वासिष्ठलैङ्गे
जिघ्रन्नऽपि तथाचाऽश्नन्प्रलपन्नऽपिं संततम् ।
कुर्वन्नऽपि यथा गच्छन्विसृजन्नऽपि मानवः॥
रुद्राक्षधारणात्सर्वैः पापैर्न लिप्यते ॥ विसृ-
जन् नाम मूत्रपुरीषत्यागइत्यर्थः ॥१५॥ सभ-
र्तृकानां विशेषो शिवरहस्ये तृतीयांशे । मु-
क्ताप्रवालस्फटिकरौप्यवैडूर्यकाञ्चनैः । युक्तं
सभर्तृकाकण्ठे धृत्वा रुद्राक्षमुत्तमम् ॥ १६ ॥
शिवरहस्ये, उमादेव्या च लक्ष्म्या च वाचा-
ऽन्यादिभिरास्तिकाः । सर्वास्त्रीभिर्धृतं
भस्म त्रिपुंड्रो धूलिनात्मना । वाचा नाम स-
रस्वती का है ॥ १७ ॥ श्रीकरञ्च पवित्रञ्च
शोकरोगनिवारणम् । लोक वश्यकरं पुण्यम्भ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्मत्रैलोक्यपावनमिति श्रुतेः ॥१८॥ संस्कार-
गणपतौ, अनोंकार कृतं कर्म न भवेत्सिद्धि-
दायकम् ॥ १९ ॥ ब्राह्मणः क्षत्रियो वैश्यः
शूद्रश्चेति शिवाज्ञया । मुच्यते सर्व्वपापेभ्यः
पञ्चवक्त्रस्य धारणादिति, बृहज्जाबालोपनि-
षदि ॥२०॥ रुद्राक्षमूलन्तद्ब्रह्मा नालन्ताद्विष्णु-
मुच्यते । तन्मुखं रुद्र इत्याहुस्ताद्विष्णुःसर्व्वदे-
वताः ॥२१॥ रुद्राक्षधारिणं श्राद्धे भोजयते
विप्रोदतः । पितृलोकमवाप्नोति नाऽत्रकार्या
विचारणा ॥२२॥ ब्रह्माण्डपुराणे, निर्माल्यं स-
लिलं पीत्वा देवदेवस्य शूलिनः । क्षयाऽप-
स्मारकुष्टाद्यैः सद्यो मुच्येत बन्धनात् । अ-
पस्मार नाम मृगी का है ॥२३॥ शिवपादा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽभिषिक्तं यः पात्रेणैव पिबेज्जलम् । सर्व्व-
पापविनिर्मुक्तः स याति परमाङ्गतिम् ॥२४॥
निर्माल्यं परमं पुण्यं नैवेद्यं पापनाशनम् ।
ब्रह्मचारिगृहस्थानां यतिनां च विमुक्तिदामिति

अथस्कान्दे । गङ्गानङ्गरिपोर्जटाविगलिता-
तन्मौलिपुष्पं शशिः । केशात्तस्य वियत्तता
विगलिता वृष्टिर्जगज्जीवनी । रुद्रोग्निः
श्रुत एवसर्वमशनम् तज्जिह्वया पच्यते ।
तन्निर्माल्यं विहाय च क्षितितले जीवन्ति
केनापि ते ॥ २५ ॥

इतिदक्षाध्वरप्रकरणे ।

आदित्यपुराणे, एक एवेति यो रुद्रः सर्व्व-
वेदेषु गीयते ॥ तस्य प्रसादलेशेन मुक्तिर्भ-
वति किंकरीति ॥ २६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति श्रीमत्परमहंसपरिब्राजकाचार्य्ययतिवर्य्य श्रीस्वामीरामागिरिभगवत्पूज्यपादशिष्येण श्री स्वाम्यनन्तानन्दगिरिणा श्रीकाशीपुरीनिवासिना कृतः श्रीशिवलिङ्गार्चनकल्पतरुःसमाप्तः ॥

॥ ॐस्वस्ति श्रीगणेशाय नमः ॥

अथ श्रीकाशीमृतिमोक्षनिर्णयः ॥

ॐऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
उर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम् ॥
उमापतिः पशुपतिः पिनाकी ह्यमितद्युतिः ॥
ईशानस्सर्व्वविद्यानां ईश्वरस्सर्व्वभूतानामिति ॥ १ ॥ काशीरुद्रतनूश्शिवा विलसति ज्ञानं यया देहिनामित्युक्तं निगमे किमन्यदधिकं वक्तुं क्षमः स्याज्जनः । यत्र प्राणवियोगकालजपरब्र-

ह्मोपदेशाच्छिवः कीटादीनापि साधनैर्विराहि-
तान्मुक्तान् करोतीत्यपि ॥ २ ॥ श्रीसुरेश्वरा-
चार्य्यवाक्यं, प्राणप्रयाणसमये प्राप्य ज्ञानं
महेश्वरात् । मुच्यन्ते जन्तवस्सर्व्वे बद्धाश्चा-
ऽनाद्यविद्यया ॥३॥ वासिष्ठे, यथा स्वप्ने मु-
हूर्ते स्यात् संवत्सरशतभ्रमः । तथा माया
बलादेव जायते जाग्रति भ्रमः ॥४॥ वृहज्जा-
बालोपनिषदि, काश्यामेव मुक्तिकामानामा-
सन् न त्याज्यम्मोचको ऽहमविमुक्ते निवसतां
नाऽविमुक्तात्परं स्थानम् भैरवीं घोरां यातना-
न्नानाविधाङ्काश्यान्तरे भुक्त्वा ततः शुद्धा मां
प्रपद्यन्ते । तारकं शैवमनुमुपदिशामि ततस्ते
मुक्ता मामनुविशन्ति न ते पुनरावर्त्तन्ते ॥५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जावालोपनिषदि काश्यां रुद्रतारकमाचष्टे६
तदोत्क्रमणे सर्व्वजन्तूनां हि श्रुतौ हरः॥
तारकं ब्रह्म व्याचष्टे तेन ब्रह्म भवन्ति हि७
भगवाननन्तकालेन तारकस्योपदेशतः॥ अवि-
मुक्तेस्थितान् जन्तून् मोचयन्नाऽत्र संश-
यः ॥८॥ औषधिवनस्पतयो यच्च किञ्चन-
प्राणभृदिति श्रुतेः ॥ ९ ॥ सर्व्वेषां भूतानां
हृद्देशे सदा सन्निहितः अन्तःप्रविष्ठः शास्ता
जनानामिति श्रुतेः ॥ १० ॥ तथा चाऽथर्ववेदे
श्रीरामवाक्यं श्रीविश्वेश्वरं प्रति, क्षेत्रे ऽत्र
तव देवेश यत्र कुत्रापि वा मृताः। कृमिकी-
टादयो ऽप्याशु मुक्ताः सन्तु न चान्यथा॥११॥
अविमुक्ते तव क्षेत्रे सर्व्वेषां मुक्तिसिद्धये॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहं संनिहितस्तत्र पाषाणप्रतिमादिषु ॥१२॥ तथा च ब्रह्मवैवर्ते, स्कंदेनोक्तमगस्त्यं प्रति, कीटाः पतङ्गा मशकाश्च वृक्षा जले स्थले ये विचरन्ति जीवाः। मण्डूकमत्स्याः कृमयोऽपि काश्यां त्यक्त्वा शरीरं शिवमाप्नुवन्ति ॥ १३ ॥ पद्मपुराणे, भूमौ जले ऽन्तरिक्षे वा यत्र कवापि मृतो द्विजः ॥ ब्रह्मात्मैकत्वमाप्नोति काशी-शक्तिरुदाहृता ॥१४॥ नारदीयपुराणे, काशी विश्वेश्वरं लिङ्गम् पूजितं नमितं स्तुतम् । न तस्य विद्यते कृत्यं संसृतिर्नैव जायते ॥१५॥ अविमुक्ते विमुच्येत तारकज्ञानजन्मना ॥१६॥ तारकं प्रणवः, तारयतीति तारकः ॥ १७ ॥ काशीखण्डे, काशीस्मरणमात्रेण किं चित्रं य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दघं व्रजत्। गर्भवासोऽपि नश्येत विश्वेशा-ऽनुग्रहात्परात् ॥१८॥ यत्र विश्वेश्वरः साक्षात् तारापतिविभूषणः ॥ तारयेत्तारकद्रोण्या दुस्तराद्भवसागरात्। द्रोणी नाम नौका का है ॥१९॥ विश्वेशाऽनुगृहीतानां विच्छिन्नाऽखि-लकर्मणाम्। भवेत् काशीं प्रति मतिर्नेतरेषां क-दाचन ॥२०॥ स्थिरा काश्यामिहैवैका प्रतिज्ञा हि मया कृता। अत्रैव मृतिमात्रेण तिरश्चा-मपि देहिनाम् ॥ २१ ॥ भक्तानामप्यभक्तानां पुण्यपापात्मनामपि । मुक्तिं दास्यामि सर्वेषां भक्तानामेव सा ऽवाहिः ॥ २२ ॥ अत्र साक्षा-न्महादेवो देहान्ते च स्वमीश्वरः। व्याचष्टे तारकं ब्रह्म जन्तूनामपवर्गदः ॥ २३ ॥ स्थि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वा यत्र दिनत्रयं विधिवशात् कुत्रापि जीवो मृतः स्यात् सोऽप्यत्र परत्र जन्मनि ततो मृत्वा भवेन्मुक्तिभाक् ॥ पुर्यो यद्यपि सप्त मुक्तिफलदा अन्या अयोध्यादयः, प्रापय्यात्र विमुक्तिदा न तु पुनः स्वातन्त्र्यतः प्राणिनाम् ॥२। येऽप्येनामनन्य प्रेत्य मुक्तिजनकास्तिर्थाः प्रयागादयस्ते सर्व्वे निवसन्ति बाणदशभिः स्वाभिः कलाभिस्त्विह ॥ स्वस्थाने कलयैकयेत्थमखिला रामेश्वराद्यास्सुरा नद्यः पुण्यतमाः सरांसि मुनयः सिद्धादयः सागराः ॥ २५ ॥ जन्मान्तरसहस्रेषु संचितैः पुण्यकर्मभिः ॥ प्राप्य वाराणसीं रम्यां प्रसादात् परमेश्वरात् ॥२६ अन्यक्षेत्रे कृतं पापं पुण्यक्षेत्रे विनश्यति ॥ पुण्यक्षेत्रे कृतं पापं गङ्गातीरे विनश्यति । गङ्गा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तीरे कृतं पापं काश्यां प्राप्य विनश्यति। काश्यां प्राप्य कृतं पापं वाराणस्यां विनश्यति। वाराणस्यां कृतं पापमन्तर्गेहे विनश्यति। अन्तर्गेहे कृतं पापं वज्रलेपो भविष्यति। वज्रलेपा हि नश्यन्ति पञ्चक्रोशीपरिक्रमात् तस्मात् सर्व्वप्रयत्नेन कुरु क्षेत्रपरिक्रमाम्॥ २७॥

इति श्रीमत्परमहंसपरिब्राजकाचार्य्ययतिवर्य्य श्रीस्वामिरामगिरिभगवत्पूज्यपाद शिष्येण काशीपुरिनिवासिना स्वामी अनन्तानन्द्गिरिणा कृतः श्रीकाशीमृतिमोक्षनिर्णयः समाप्तः॥ श्रीकाशी विश्वेश्वरनाथजी प्रसन्नोऽस्तु॥

द्विरूपं हि ब्रह्मावगम्यते नामरूपविकारभेदोपाधिविशिष्टं तद्विपरीतं च सर्वोपाधिविवर्जितमिति॥ ॐतत्सत्॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

